हरिः ॐ

श्रीसत्यपरायणतीर्थविरचिता

# जयन्तीकल्पव्याख्या

श्री गुरुभ्यो नमः ॥ इह खलु संसाराकूपारपारं जिगमिषतः तत्साधनकर्मादिकमजानतो मन्दमतीन्सज्जनानुज्जिहीर्षुर्दयालुर्हृदयालुवर्यः श्रीमदानन्दतीर्थमहामुनिः सज्जनसंसारदुरितकर्षककृष्णजयन्तीमाहात्म्य-कथनव्याजेन निरूपयति ॥ रोहिण्यामित्यादिना समस्तेन ग्रन्थेन ।

॥ श्री हयग्रीवाय नमः ॥

**रोहिण्यामर्धरात्रे तु यदा कृष्णाष्टमी भवेत् ।**
**जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी ॥**

यद्वा रामादिजयन्तीनां विशिष्य कृष्णजयन्तीप्रशंसा किमर्था । पुराणेषु सर्वासु जयन्तीष्वप्युपवासस्य विहितत्वात् सर्वास्वप्युपवासः कर्तव्यः । तद्विहाय कृष्णजयन्त्यामेवोपवासः किमर्थः । उत्सवान्ते च पारणमित्याद्युक्तेः कृष्णपूजारूपोत्सवान्ते किंचिदुपहारादेः कर्तव्योक्तेः केवलोपवासः किमर्थः । तिथिभांते च पारणमित्याद्युक्तेः चशब्दसामर्थ्यात् तिथ्यन्ते भांते वा पारणं कर्तव्यमित्यर्थलाभात् । उभयांते पारणं कर्तव्यमिति कुतः एतत्सर्वं प्रमाणैरुपपादयति भाष्यकारः रोहिण्यामित्यादिना ।

तत्रादौ कृष्णजयन्तीस्वरूपं निर्वचनलब्धमर्थं च दर्शयति। रोहिण्यामिति । अर्धरात्रे रोहिण्यां सत्याम् यदा कृष्णाष्टमी भवेत् तदा सा

तिथिः जयंती प्रोक्ता। नाम प्रसिद्धा। सर्वपापप्रणाशिनीति।। कृष्णश्च कीदृशः नियमनादिना सकललोककर्षणात्कृष्णः। तच्चोक्तम्।

यतः कर्षसि देवेश नियम्य सकलं जगत्।
अतो वदन्ति मुनयः कृष्ण त्वां ब्रह्मवादिनः।। इति महाकौर्मे ॥

न च 'कृषेर्वर्णे' इति वर्णे अभिधेये कृषेर्नूक् प्रत्ययो विहितः नान्यत्रेति वाच्यम्। विष्णुर्नारायणः कृष्णः इत्यत्र कर्षत्यरीनिति कृष्णः। बाहुलकाद्वर्णं विनापि जगति वैय्याकरणैरेव व्याख्याततत्वात्। कृषेरिति योगविभागाद्वा नूक्। यद्वा कृषिर्भूवाचकः शब्दः। णश्च निर्वृतिवाचक इति। भू बहौ बहुः पूर्णतायामित्युक्तेः। पूर्णसुखरूप इत्यर्थः। कृष्णरूपत्वाद्वा इदानीं लक्षणप्राप्त एव नूक्। अग्निवच्छत्रुदाहकत्वाद्वा कृष्णः। कृष्णः सीसादिलोहे तु कृष्णो नीले नले कलाविति कोशात् कलिवाचककृष्णशब्देन कलियुगस्थजनाः गृह्यन्ते। कृष्णाः कलयः कलियुगस्थजनाः रक्ष्यत्वेनास्य सन्तीति अर्श आद्यच्। विशेषेण कलियुगस्थजनरक्षक इत्यर्थः। द्वापरान्ते कृष्णावतारस्य जातत्वात्। रामाद्यवतारस्य व्यवहितत्वादिति*। विशेषेणेतररूपापेक्षया कलियुगस्थसज्जनरक्षकत्वं कृष्णस्येति भावः।

कीदृशी जयन्ती।। सर्वपापप्रणाशिनी।।

सर्वान् पातीति सर्वपं। अपां समूहः आपं। सर्वपं च तत् आपं च सर्वपापं। नाशनशब्द अभाववचनः।। सर्वपापस्य सर्वरक्षकोदकसमूहस्य

---

* छलारि नरसिंहाचार्याः (स्मृत्यर्थसागरे)

१. श्रीगीताभाष्योदाहृत कूर्मपुराण अध्याय ५ श्लोक ९ पान ५६,प्र : अ.भा.मा. म.मं. बेंगलूर, धातुसंख्या १५२३ सिद्धान्तकौमुदी चौखाम्बा संस्कृत सीरीज

प्रणाशनं आत्यन्तिकाभावः यस्यां सा सर्वपापप्रणाशिनी। यद्वा अश् भोजने अस्या ल्युट्प्रत्यये अनादेशे अशनमिति रूपम्। अत्र नञर्थकप्रस्थभिन्नक्रमेणान्वर्थः। प्र न विद्यते प्राचार्यो इत्यत्रेव प्रशब्दस्य नञर्थकत्वमिति। णं सुखसाधनं। णश्च निर्वृतिवाचक इत्युक्तेः अर्श आद्यजंतः सर्वपाप सर्वजीवनरूपम् अशनं यस्यां सा सर्वपापप्रणाशिनी। एतेनैकवारं सालिग्रामतीर्थप्राशनातिरिक्तजलपानमपि कृष्णजयन्त्यां न कर्तव्यमिति भावः सूचितः। अत एव सर्वपापप्रणाशिनी सर्वाघनिरासकेत्यर्थः। अन्नमाश्रित्य तिष्ठन्ति पापानीत्युक्तेः[२] । तस्मात् कृष्णजयन्ती जयं पुण्यं तनोति कुरूते इति जयन्तीशब्दवाच्या। जयन्तीनां असा अधिकश्रेष्ठा। अकारेणाधिकं प्रोक्तमित्युक्तेः। सकारः सुखवाची स्यादित्युक्तेः। तदुक्तं स्कान्दे[३] ।

**प्रजापत्येन संयुक्ता अष्टमी तु यदा भवेत्।**
**श्रावणे बहुले सा तु सर्वपापप्रणाशिनी।**
**जयं पुण्यं च कुरुते जयन्तीत्येव तां विदुरिति।।**

**सर्वासां तु जयन्तीनां श्रेष्ठा कृष्णाष्टमी मता।**
**यस्मात्सन्निहितात्यन्तं तत्रैवोपवसेन्नरः ।।**

**सर्वास्वपि जयन्तीषु पूजा कार्या विशेषतः।**
**सान्निध्य एव कर्तव्य उपवासो न दूरग ।। इति**

भारद्वाजसंहितायां[४] सन्निहिता अस्माकं कालेन समीपस्थेति। अत

---

२. बृहन्नारदीयपुराण अ. २१ श्लोक २४

३. स्कान्द पुराण .....

४. स्मृत्यर्थसागरे अपि पान ३८ प्र. निर्णयसागर

एवेतरजयन्तीर्विहाय कृष्णजयन्तीमाहात्म्यकथनं युक्तमिति भावः। सर्वजयन्त्यपेक्षया एव मुख्यत्वात् तत्रैवोपवासः। नान्यत्रेति भावः। कालाष्टमीति पाठान्तरम्। कं सुखं एकादशीकृष्णाष्टम्युपहारादिजनितं सुखं तस्य कस्य अलं वारणं यस्यां सा काला। अलं भूषणपर्याप्तिवारणेष्विति धातुव्याख्यानात्[५] । काला च सा अष्टमी च कालाष्टमीति।।

**यस्यां जातो हरिः साक्षान्निशीथे भगवानजः।**
**तस्मात्तद्दिनमत्यर्थं पुण्यं पापहरं शुभम्।।**

यस्यां जयन्त्यां तत्रापि निशीथे अर्धरात्रे। निशीथः स्यादर्धरात्र इत्यमरः[६] निशब्दो निषेधार्थकः। निरामिणः निखिलेत्यादिवदिति। शं सुखं क्षुधानिवृत्तिरूपसुखं। साध्यत्वेन अस्यास्तीति शीं।

एकाक्षरात्प्रतिषेधो वक्तव्य इति शास्त्रमहाभाष्ये[७] प्रत्याख्यातत्वात् शीतिरूपसिद्धिरिति। शि च तत् इथं च। आश्चर्यकरान्नं च शीथं। इ विस्मय इत्युक्तेः। अन्नं थमिति श्रुतेः। नि न विद्यते शीथं यस्मिन् तत् निशीथं। तस्मिन् क्षुधानिवर्तकान्न भक्षणायोग्य इत्यर्थः। अर्धरात्रे हरिः सकलसज्जनदुरितदूरीकरणसमर्थः। अजः उत्पत्तिशून्यः। भगवान् ऐश्वर्यादिगुणोपेतः वासुदेवः। साक्षात् मुख्यतः अभिन्नांशेन। जातः प्रादुर्भूतः तस्मात् तद्दिनं अत्यर्थं पुण्यं पुण्यकरं पापहरं संसार प्रापकाशुभ-परिहारकम्। शुभं श्रुंभशोभायामिति धातोः[७*] शोभितमित्यर्थः।।

---

५. धातुसंख्या ५१६

६. अमरकोश प्रथमखण्ड कालार्क श्लोक ६ ७. शास्त्र महाभाष्य.....

७*. धातुसंख्या १३२२, ८ धातुसंख्या ११९८,

**यस्मात्सर्वैरुपोष्या सा जयन्ती नाम सा तदा।**
**द्विजातिभिर्विशेषेण तद्भक्तैश्च विशेषतः।।**

यस्मात् सा श्रेष्ठा सकारः सारवाची स्यादित्युक्तेः। सा कृष्णजयन्ती। सदा सर्वैः उपोष्या। नाम बहुप्रमाणप्रसिद्धा। सदेत्यनेनोपन्वासस्य नित्यता सूचिता। न तु कादाचित्कतेति। सर्वैरित्येतदुपपादयति। विशेषेण द्विजातिभिरिति। तत्रापि तद्भक्तैः विशेषतः उपोष्येति चशब्दोऽवधारणे।।

**यो भुङ्क्ते तद्दिने मोहात्पूयशोणितमत्ति सः ।**
**तस्मादुपवसेन्नित्यं तद्दिने श्रद्धयान्वितः।।**

अन्यथा विरुद्धफलमाह य इति। यः पुरुषः तद्दिने कृष्णजयन्तीदिने। मोहात् चिते वैचित्र्यात् मुहवैचित्य इति[८] धातुव्याख्यानात्। यद्वा[९] मर्हि वृद्धौ अस्मादुडः। यैः वृद्धैः अस्मदार्यैः। उ इत्यवयवनिपात उरीकरणे वर्तते। उउह इत्यत्र सवर्णदीर्घः। ततो गुणः उ उरीकृतं उपहारादिकमङगीकृतमिति उहः। तस्मात् अस्मदार्यैः कृष्णपूजानन्तरं उपहारादिकं कृतं वा न वा। कृतमित्युहादित्यर्थः। भुङ्क्ते भुजि पालनाभ्यवहारयोरिति[१०] धातुव्याख्यानात्। अभ्यवहारः देहधारणोपयुक्तान्नोपहारफलजलादिस्वीकारः। पूयशोणितं द्वंद्वैकवद्भावः पूयसहितं शोणितमिति वा। अत्ति तद्दिने तद्भुक्तमन्नं तत्सदृशं भवतीति भावः। तस्मात्तद्दिने श्रद्धया भक्त्यान्वितः सन् नित्यमुपवसेत्। अत्र पुनस्तद्दिने इत्यनेन निराहारस्यात्यावश्यकता सूचितेति। नित्यमित्यनेनैतस्य व्रतत्वादुद्यापनादिकरणानन्तरं न त्याज्यता सूचिता। यद्वा मोहात्। मोहो वञ्चनं तस्मात् मोहो नटनं वञ्चनं वेति

---

९. धातुसंख्या ६३४,

१०. धातुसंख्या १४५४

सर्वज्ञकल्पोक्तेः[११]।

ल्यब्लोपनिमित्ता[१२] पञ्चमी। मोहं वञ्चनं नटनं वा प्रदृश्य। विद्यमानाकाराच्छादनेनाविद्यमानाकारप्रदर्शनं नटनं। अविद्यमानकथनं वञ्चनमिति तत्वप्रकाशिकाटिप्पणीशर्करोक्तेः[१३]।

अहमपि संप्रदायप्रवर्तक इति लोकान्वञ्चयितुमिति यावत्। अप्रामाणिकं प्रमाणविरुद्धमपि तद्दिने कृष्णप्रादुर्भावदिने कृष्णपूजानन्तरं उपहारादिकं स्वयं भुङ्क्ते। स्वयं कृत्वा च भोजनं स्वानुसारिणः भोजयति य सः पूयशोणितं अत्ति। तदनुसार्यपि पूयशोणितमत्ति। पूयशोणित-विशिष्टं। तद्रूपं वा नरकाद्यनर्थं प्राप्नोतीत्यर्थः। तदुक्तं चातुर्मास्यकल्पे[१४]।

ततो जन्माष्टमी पुण्या ममातीवप्रिया हि सा।
तस्यां निशीथे कर्तव्यं कृष्णमूर्तेः प्रपूजनम्।।
निशीथव्यापिनी या स्यात् सैवोपोष्याष्टमी व्रते।
दिनद्वये निशीथे च व्यापिनी स्याद्यदाष्टमी।।

पूर्वामुपोष्य कुर्वीत परेद्युः पारणं निशि।
न हि दोषस्तदा प्रोक्तो निशीथोत्तरभोजनमिति।

तत्रैवोत्तरत्र[१५]

---

११. सर्वज्ञकल्प ....

१२. वार्तिक सूची संख्या १४७४-१४७५ सिद्धान्त कौमुदी

१३. तत्वप्रकाशिकाटिप्पणी शर्करा अ. १ पा १ अधि १
प्र : श्रीनिवास वासुदेव बेळगाँव

१४. वराहपुराणान्तर्गत चातुर्मास्य महाकल्प अ १९
श्लो २१, २२, २३ प्र. गोपालनारायणराव बाँबे

१५. श्लो ३३, ३४, ३५ ,

**तस्यां कृष्णं समभ्यर्च्य निशीथे विधिवन्नरः ।**
**अपूपैर्नवनीताद्यैः शर्कराक्षीरसंयुतैः।**
**पारणा हे प्रकुर्वीत मन्वादि श्राद्धमुत्तमम्।।**

**पृथक् पाकेन विप्राश्च भोजयेद्दक्षिणास्तथा।**

**दत्वा नत्वा समाप्नोति यज्ञकोटिसमं फलमिति**

उक्तं च छलारीयधर्मशास्त्रे[१६] । उत्सवान्ते च पारणमित्यत्र उत्सवान्तशब्देन द्वितीयदिने स्नानानन्तरं कृष्णपूजानन्तरकालो गृह्यते। न त्वर्धरात्रे कृष्णपूजानन्तरकालः।

**अद्य स्थित्वा निराहारः श्वो भुड़्क्ते परमेश्वर ।**
**भोक्ष्यामि पुण्डरीकाक्ष अस्मिन् जन्माष्टमीव्रते।।**

इत्युपवासस्य सङ्कल्पितत्वादिति[१७]। पुण्डरीकाक्ष अस्मिन्नित्यत्र सन्ध्यभाव आर्षः। अर्धरात्ररूपसन्धिकाले उपहाराद्यभावसूचको वा।

**तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम्।**
**तस्मात्सर्वप्रयत्नेन तिथिभांते च पारणमिति।।**

स्मृतौ, तिथिभोभयान्तपारणाकरणे प्रत्यवायोक्तेः। नक्षत्रापेक्षया तिथेर्मुख्यत्वेपि चतुर्गुणनाशस्याद्यनिष्डत्वेन तत्परिहाराय तदन्तपारण-स्याप्यवश्यकत्वादुभयांतपारणं युक्तमिति भावः। तेन च पूर्वदिने उपवासः स्वत एव सिद्ध इति।

---

१६ स्मृत्यर्थसागरे अपि पान अलङ्क ३५ प्र. निर्णयसागर

१७ स्मृत्यर्थसागरे उदाहृत पान ३४ प्र. निर्णयसागर

उक्तं च व्रतार्के[१८]। पारणा तिथिभान्ते कार्या। तदाह भृगुः[१९]

**जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।**
**पूर्ववद्धैव कर्तव्यातिथिभान्ते च पारणा ॥**

ब्रह्मवैवर्ते[२०] ।

**अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित्।**
**हन्यात्पुराकृतं कर्म उपवासार्जितं फलम्।।**
**तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम्।**

तस्मात्प्रयत्नतः कुर्यात्तिथिभांते च पारणमिति मुख्यकल्पः।

एकतरान्तस्त्वनुकल्प इति।

एतेन तिथिभोभयान्तपारणमेवावश्यकमिति भावः।

पारणेत्युक्तत्वात् पूर्वदिने उपवासः स्वतः सिद्ध इति भावः।

तत्रैव स्थलान्तरे। अथ जन्माष्टमी व्रतप्रयोगः।

तत्र पूर्वदिने दन्तधावनं कृत्वोपवासदिने प्रातः सूर्यसोमोयमकलाभूतान्यहः क्षपापवनोदिवाभूतिराकाशंखवनराः। ब्राह्मं शासनमास्थाय कल्पध्वमिह सन्निधिरित्युक्त्वा समफलपुष्पाक्षतं जलपूर्णताम्रमादाय मासाद्युल्लिख्यामुकफलकामः पापक्षयकामो वा कृष्णप्रीतये कृष्णजन्माष्टमीव्रतं करिष्ये।

**वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये।**
**उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम्।।**

---

१८. व्रतार्क ..... उदाहृत पान                    १९. भृगुः ....

२०. ब्रह्मवैवर्त कृष्णजन्मखण्ड अ ८ श्लो ६७, ६८, ६९
प्र. श्री वेङ्कटेश्वर मुद्रणालय १९५१-मुम्बई

अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीं।
अर्चयित्वोपवासेन भोक्ष्येऽहं पश्चिमेऽहनीति।

तत्रैवोत्तरत्र[२१]

उपवासं समादेशाल्लोकाः जन्माष्टमी व्रतमिति।

तत्रैवोत्तरत्र[२२]।

सप्तम्यां लघुभुक्कुर्याद्दन्तधावनपूर्वकं।
उपवासस्य नियमं रात्रौ स्वस्थो जितेन्द्रियः॥

केवलेनोपवासेन तस्मिन् जन्मदिने मम।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः॥

उपावृतस्तु पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयः सर्वभोगविवर्जित इति ॥

उप इत्यस्यार्थ आवृत इति। आङुपपदादो व्रश्चू छेदने[२३] अस्मात्कप्रत्यये तस्य ग्रहिज्यावग्रियव्यधिवष्टिवर्छतिपृछतीनां कितीति संप्रसारणे[२३*] आवृत इति रूपं। पापानां योग्यतया लाभः। सम्यक् सर्वपापपरिहारक इत्यर्थः। उप उपसर्गाणां ससाधनक्रियावाचकत्वात्। प्राचार्या इत्यादिवत्। उप सर्वपापहर इत्यर्थः। यद्वा उ उत्कृष्टानां पापानां। पः नाशः यस्मात्सः उपः पापानां नाश इत्यर्थः। भक्तेषु वसन्ति गुणाः यस्मादिति वासः। उपश्चासौ वासश्च उपवासः। निराहार इत्यर्थः। स उपवासः। उपवासः उप समीपे भगवत्समीपे। भक्ता वसन्त्यस्मादित्युपवासः। ब्रह्मलोकप्रापक

२१. ब्रह्मवैवर्त ......

२२. ब्रह्मवैवर्त .....

२३. धातुकोश १२९२

२३* पाणिनीसूत्र अ ६ पा १ सू १६

इति यावत्। तन्त्रं। एतादृशमाहात्म्यविशिष्टः कृष्णाष्टमी निराहार इत्यर्थः।

तत्रैवोत्तरत्र[२४] एकादशीनां विंशत्यः कोट्योद्याः प्रकीर्तिताः। ताभिः कृष्णाष्टमी तुलयेति। एकस्यां कृष्णजयन्त्यां नियमेनोपवासकरणे विंशतिकोटिसंख्याकैकादशीव्रतफलं भवति। अन्यथा तद्विपरीतमिति भावः। उक्तं तु निबन्धचूडामणौ[२५]। कृष्णाष्टमीव्रते सर्वैरेवोपवासः एकादशीतुल्यत्वात्।

**औपासनं ब्रह्मयज्ञं कृष्णाष्टम्यां न कारयेत्।**
**तीर्थं तु त्रिः पिबेत्तत्र वैष्णवस्य विधिः स्मृत इति।**

तत्र तीर्थं तोयं त्रिवारमाचमनमेव कुर्यादित्यर्थः। सन्ध्यात्रयेऽपि त्रिस्त्रिवारमाचमनं कुर्यादित्यर्थः। तुशब्दो विशेषार्थः। एकैकस्यां सन्ध्यायां त्रिवारं त्रिवारमाचमनं कुर्यादिति भावः। तदतिरिक्ताचमनमपि न कुर्यादित्यर्थः। एकादशीतुल्यत्वोक्तेः।

एवमुत्तरत्रापि। यद्वा त्रिः कालत्रयेपि तीर्थं भागवतादिसच्छास्त्रं पिबेत् अभ्यसेत्। पपौ (पपुः) नितान्तं सरसाक्षिभृंगैरित्यादिवदिति[२६]। त्रिः त्रिगुणितं तीर्थं वेदादिः। भागवतादिस्मृतिः ब्रह्मसूत्रादिकं च शास्त्रं तु विशेषेण पिबेत् अभ्यसेदित्यत्र इति वा। त्रिः त्रिविधमित्यर्थ इति वा। द्विखगो ह्यादिवृक्ष इत्यत्र द्विः द्विविध (द्विप्रकारः) इत्यर्थ इति भागवत टीकोक्तेः[२७]।

---

२४. ब्रह्मवैवर्त ..... २५. निबन्धचूडामणि....

२६. महाभारततात्पर्यनिर्णय अ. ४ श्लो. १३
प्र.टि. आर. कृष्णाचार कुम्भकोण

२७. भागवतटीका विजयध्वजीय दशमस्कन्ध अ. २ श्लो. २८ प्र : बेळगांव



**एकादशीदिने वींद्र तथैव हरिवासरे ।**
**कृष्णाष्टम्युपवासे च विष्णुपञ्चकसंज्ञिके ॥**
**त्रिवारं न पिबेत्तोयं सालग्रामशिलाच्युतम् ।**
**पिबेद्य दिवि मूढात्मा रौरवं नरकं व्रजेदिति ॥**

गरुडपुराणोक्तेः[२८] ।

स्कान्दे च[२९] ।

**कृष्णाष्टम्यां तु यः तीर्थं त्रिः पिबेद्वैष्णवो बुधः।**
**पितृयज्ञं ब्रह्मयज्ञं न कुर्यादाहुतिस्तथा।**

भविष्योत्तरे[३०]

**रटन्ति हि पुराणानि भूयो भूयो वरानने ।**
**न भोक्तव्यं न भोक्तव्यं कृष्णजन्माष्टमीदिन इति ॥**
**अतीतानागतं येन कुलमेकोत्तरं शतम् ।**
**पातितं नरके घोरे भुज्यते कृष्णवासर इति ॥**

प्रत्यवायः श्रूयते

**शूद्रान्नेन तु यत्पापं शवहस्तस्य भोजनम् ।**
**तत्पापं लभते कुन्ति जयन्त्यां भोजने कृते ॥**

नारदसंहितायां[३१]

---

२८. गरुडपुराण .... २९. स्कान्द पुराण

३०. भविष्योत्तरे - कृष्णामृतमहार्णवे अपि श्लोक १८०
प्र : अ.भा.मा.स. मं. बेंगलूर ३१. नारदसंहिता....

**उपोष्य जन्मचिन्हानि कुर्याज्जागरणं तु यः ।**
**अर्धरात्रायुताष्टम्यां सोऽश्वमेधफलं लभेदिति ॥**

जयन्तीकरणे पुण्यम् ।

**स्कान्दे[३२] । प्राजापत्येन सयुक्ता अष्टमी तु यदा भवेत् ।**

**श्रावणे बहुले सा तु सर्वपापप्रणाशिनी ।**
**जयं पुण्यं च कुरुते जयन्तीत्येव तां विदुरिति ॥**

भविष्योत्तरे[३३] । श्रावणे बहुले पक्षे कृष्णजन्माष्टमी व्रतम् ।

न करोति नरो यस्तु भवन्ति ब्रह्मराक्षसम् इति । तदुक्तं भारततात्पर्यनिर्णये[३३*] ।

**आविश्य पूर्वं वसुदेवमेव विवेश तस्माद्दत्काल एव ।**
**देवीमुवासात्र च सप्तमासान्**
**सार्धांस्ततश्चाविरभूदजोऽपि ॥**

**यथा पुरस्तम्भत आविरासीद-**
**शुल्करक्तोऽपि नृसिंहरूपः ।**
**तथैव कृष्णोऽपि तथैव माता**
**पितृक्रमादेव विमोहयत्यजः ॥**

**पितृक्रमं मोहनार्थं समेति न तावता रक्तश्च ।**
**जातोऽस्य देहस्त्विति दर्शनाय सशंखचक्राब्जगदः स दृष्टः ॥**

---

३२. स्कांदपुराण .... ३३. भविष्योत्तरपुराण .....

३३*भारततात्पर्यनिर्णय श्रीमदाचार्यः अ.१२ श्लो. ६२-६८
प्र.न. कृष्णमूर्ति उत्तरादिमठ, बेंगलूर



**अनन्तसूर्याभकिरीटयुक्तो**
**विद्युत्प्रभे कुण्डले धारयंश्च ।**
**पीताम्बरो वनमाली स्वनन्त-**
**सूर्योरदीप्तिर्ददृशे सुखार्णवः ॥**

**स कञ्जजजेशप्रमुखैः सुरैः स्तुतः**
**पित्रा च मात्रा च जगाद शूरजम् ।**
**न च स्वमानन्दगृहानिति स्म**
**ततो बभूव द्विभुजो जनार्दनः ॥**

**तदैव जाता च हरेरनुज्ञया**
**दुर्गाभिधा श्रीरनु नन्दपत्न्याम् ।**
**ततस्तमादाय हरिं ययौ स**
**शूरात्मजो नन्दगृहान्निशीथे ॥**

**संस्थाप्य तं तत्र तथैव कन्यकाम्**
**आदाय तस्मात्स्वगृहं पुनर्ययाविति ॥**

अत्र कृष्णप्रादुर्भावानन्तरं शिशोः मधुक्षीरादिकमदत्वा ब्राह्मणानां गोभूजलहिरण्यान्नादिकमदत्वा भगवदाज्ञया तमादाय नन्दगृहमागत्य तत्र कृष्णं संस्थाप्य तत्र कन्यकामादाय पुनर्गतत्वोक्तेः ।

तत्रैवोत्तरत्र[३४]

**अथ प्रभाते शयने शयानमपश्यतामब्जदलायताक्षां ।**
**कृष्णं यशोदा च तथैव नन्द आनन्दसान्द्राकृतमप्रमेयम्॥**

---

३४. भारततात्पर्यनिर्णय, अ १२ श्लोक ७६, ७७, ७८

**मेनात एतौ निजपुत्रमेनं स्रष्टारमब्जप्रभवस्य चेशं ।**
**महोत्सवात्पूर्णमनाश्च नन्दोऽदाल्लक्षमितास्तदा गाः ।**
**सुवर्णरत्नाम्बरभूषणानि बहूनि गोजीवगणाधिनाथः**
**प्रादादथोपायनपाणयस्तं गोपा यशोदां च मुदा**
**स्त्रियोऽगमन्निति ।**

प्रादुर्भावदिने जातकर्माद्युत्सवाकरणात् परदिने

उत्सवकरणोक्तेश्च उत्सवान्ते च पारणमित्युक्तेः पूर्वदिने उपवासो ज्ञायत इति ।

उक्तं च भागवते[३५] ।

**सविस्मयोत्फुल्लविलोचनो हरिं सुतं**
**विलोक्यानकदुन्दुभिस्तदा ।**
**कृष्णावतारोत्सवसंश्रमोऽस्पृशन्**
**मुदा द्विजेभ्योऽयुतमाप्लुतो गवामिति ॥**

कृष्णावतारजनितः योऽयमुत्सवः । तत्र संश्रयः आदरो यस्य सः । स आनकदुन्दुभिः । सुतं विलोक्य आप्लुतः स्नातः । गवामयुतं द्विजेभ्यः अस्पृशन् । मनसेति शेषः । मनसा ददौ । स्पर्शनै मारुते स्पर्शदानयोः स्पर्शनं गतमिति विश्वः[३५(a)] । यद्वा कृष्णायां भूमौ योऽवतारः तन्निमित्तोत्सवः । तत्र संश्रमो यस्य सः वसुदेव इति व्याकुरुते च कृष्णं तदन्नस्य रक्तोग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वत इत्यादेः । एतेनाधुना जातकर्माऽपि न जातं कथं जातस्य कृष्णेति नामेति शङ्का पराकृतेति ।

तत्रैव स्थलान्तरे[३६]

---

३५. भागवत दशमस्कन्ध अ ३ श्लो. ११   ३६. ... अ. ३ श्लोक ५३



**यशोदा नन्दपत्नी च जातं परमबुध्यत ।**
**न तल्लिगिं परिश्रांता निद्रयापगतस्मृतिरिति ॥**

**नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ।**
**आहूय विप्रान्वेदज्ञान्स्नातः शुचिरलंकृतः ॥**

**वाचयित्वा स्वस्त्ययनं जातकर्माऽऽत्मजस्य वै ।**
**कारयामास विधिना पितृदेवार्चनं तथेति[३७] ॥**

अत्र प्रादुर्भावदिने जातकर्माद्युत्सवाकरणात्परदिने उत्सव-करणोक्तेश्चोत्सवान्ते च पारणमित्युक्तेः। पूर्वदिने उपवासो ज्ञायत इति भावः ॥

**कृत्वा शौचं यथा न्यायं स्नानं कुर्यादतन्द्रितः ।**
**प्रभातकाले कुर्वीत योगायेत्यादिमन्त्रतः ॥**

तद्दिन इत्यस्य मध्यदीपन्यायेनात्राप्यन्वयः ।

तद्दिने कृष्णजयन्त्यां । प्रभातकाले यथान्यायं शौचं कृत्वा अतन्द्रितः आलस्यरहितः सन् योगायेत्यादिमन्त्रेण

योगाय योगपतये योगिने योगशंभवे ।

योगेश्वराय देवाय गोविंदाय नमो नमः॥ इत्यादिमन्त्रेणेत्यर्थः ।

**योगायेति** । योगाय युज्यते हृदि योगिभिः ध्यायते इति योगः । युनक्ति गुणान्स्वस्मिन्निति वा । भक्तानां भवतारणोपात्य इति वा योगः उपायरूपः । दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयः प्रसिद्धय इति प्रयोगाद्भागवत इति गीताभाष्योक्तेः[३७(a)]

---

३७ ,, अ ५ श्लो १, २

३७* गीताभाष्य अ. २ श्लोक ३९ पान २३   प्र.अ.भा.मा.म.मं. बेंगलूर

तस्मै योगपतये । योगः ध्यानमेषामस्तीति योगाः । सज्जनाः अर्श अद्यजंतः । तेषां पतिः तस्मै योगिने। योगः दुर्जननिरसनोपायः अस्यास्तीति योगी तस्मै । योगाशंभवे योगेन ज्ञानाख्योपायेन भक्तानां शं सुखं भावयति उत्पादयति दिशतीति यावत् ।

**योगशंभुः । भवतेरौणदिकोडुः** तस्मै । योगेश्वराय योगस्वामिने । देवाय क्रीडादिगुणविशिष्टाय । यद्वा सर्वाभिलषितं ददातीति देः ददातेर्डे प्रत्ययः। दे चासौ वश्च ज्ञानरूपश्च देव इति। गोविन्दाय गवां अपां विन्दः लाभः यस्मात्सः गोविन्दः। गोषु अप्सु विंदः लाभः अभिव्यक्तिर्यस्य तस्मै। विदृलाभे[३८] विदोत्पत्ताविति[३९] धातुव्याख्यानात्। अब्जनकाबाश्रितगोविन्दस्मरणेनैव स्नानं कर्तव्यमिति भावः।

आपो नारा इति प्रोक्ता आपो वै नरसूनवः।

अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत इति स्मृतेः[४०]॥ स्नानं कुर्यात् ॥

**मध्याह्नकाले पुनः सायङ्काले त्वतंद्रितः ।**
**स्नायीत पूर्वमन्त्रेण श्रद्धाभक्तियुतः पुमान्॥**

मध्याह्नकाले वासुदेवं अनुस्मरन् पुनः स्नानं कुर्यात्। सायङ्काले तु श्रद्धाभक्तियुतः पुमान् अतंद्रितः सन् पूर्वमन्त्रेण योगाय योगपतये इति मन्त्रेण स्नायीत॥

---

३८. धातुसंख्या १४३२ ३९. धातुसंख्या ११७१

४०. श्रीमत् ब्रह्मसूत्रभाष्य उदाहृता व्यासस्मृतिः अ. १ पा १ अधि ७ सूत्र ३० प्र. भाष्य दीपिका प्रकाशन समिति



**ततः पूजां प्रकुर्वीत विधिवत्सुसमाहितः।**
**यज्ञायेति च मन्त्रेण श्रद्धाभक्तियुतः पुमान् ।।**

ततः चन्द्रोदयान्तरं। श्रद्धाभक्तियुतः श्रद्धा आस्तिक्यबुद्धिः। भक्तिः माहात्म्यपूर्वकसुदृढस्नेहः। तद्युतः सुसमाहितः पुमान् यज्ञायेति मन्त्रेण। यज्ञाय यज्ञपतये यज्ञानां सम्भवाय च।

यज्ञेश्वराय गोपाय गोविंदाय नमो नम॥ इति मन्त्रेणेत्यर्थः।

यज्ञायेति। यज्ञाय यज्ञभोक्तृत्वाद्यज्ञः । यद्वा जपयज्ञश्च जातपो याज्य एव चेति गीतातात्पर्योक्तेः[४१]। याज्यत्वाद्यज्ञः तस्मै यज्ञपतये। याति गच्छति जानातीति वा यः चेतनप्रपञ्चः। तं ज्ञापयति पावयतीति ज्ञः। या प्रापणे ज्ञश्रद्धभाव इति[४२] धातुव्याख्यानात्।

तदुक्तं छांदोग्यभाष्ये[४३]।

**ज्ञश्रद्धभाव इत्यस्माद्यन्नयं पावयेद्यतः।**

**अतो वायुर्यज्ञनामेति**। तट्टीकावेदेशीये[४४]। यदेष यन्निदं सर्वं पुनाति तस्मादेष एव यज्ञ इति यज्ञशब्दार्थनिर्वचनरूपं वाक्यं व्याचष्टे यन्निति। अतस्तय इत्यस्य यन् गच्छन्नित्यर्थः। यातेः गत्यर्थत्वप्रसिद्धेः। ज्ञ इत्यस्य पावनाख्यशुद्धभावः कथमर्थ इत्यतो धातुं पठति। ज्ञेति धातोतिति शेष इति। अतो वायुर्यज्ञनाम। तस्य पतिः स्वामी। तस्मिन् यज्ञानां

---

४१. गीतातात्पर्य अ १० श्लोक २१-४० पुट १०२ पङ्क्ति १८ प्र. अ भा मा म मं बेंगलूर ४२. धातुसंख्या १०४९

४३. छांदोग्यउपनिषद्भाष्यं श्रीमदाचार्यः अ ४ खण्ड १६ मं १ प्र. अ भा मा म मं बेंगलूर

४४. छांदोग्यभाष्यटीका वेदेशीय पुट १४३ टी. आर. कृष्णाचार

संभवाय अश्वमेधादियज्ञानां यज्ञसाधनस्रुक्स्रुवादीनां सम्भवाय सर्जकाय। यज्ञेश्वराय यज्ञस्वामिने। गोपाय वेदरक्षकाय। प्रसिद्धकामधेनुरक्षकाय। गोविंदाय वेदप्रतिपाद्याय नमो नमः।

पूजां कृष्णपूजां विधिवत् प्रकुर्वीतेत्यर्थः।

**कृष्णं च बलभद्रं च वसुदेवं च देवकीं।**
**नन्दगोपं यशोदां च सुभद्रां तत्र पूजयेत्॥**

तत्र कृष्णजयन्त्यां कृष्णादीन् पूजयेत्। परस्परसमुच्चये चशब्दः। एकः समुच्चये। अन्येषां त्रयाणां उपसर्गाणां। अध्यात्मिकाद्युपसर्गत्रया-निरासकत्वं पूजाय इति सूचितम्।

**जातः कंसवधार्थाय भूभारोत्तारणाय च।**
**कौरवाणां विनाशाय दैत्यानां निधनाय च॥**

अर्घ्यदानप्रसंगेनावतारप्रयोजनमाह। जात इति। हे हरे शशिमण्डले अभ्युदिते सति कंसवधार्थाय भूभारोत्तारणाय च। कौरवाणां दुर्योधनादीनां विनाशाय दैत्यानां नरकादिदैत्यानां निधनाय॥

**पांडवानां हितार्थाय धर्मसंस्थापनाय च ।**
**गृहाणार्घ्यं मता दत्तं देवक्या सहितो हरे॥**
**अर्घ्यं दत्वा समभ्यर्च्याभ्युदिते शशिमण्डले॥**
**पांडवानां धर्मादीनां हितार्थाय धर्मसंस्थापनाय च।**

जातोऽसि अतस्त्वं देवक्या सहितः सन् मया दत्तमर्घ्यं अर्घ्यादिकं गृहाणेति मन्त्रेण अर्घ्यं दत्वा कृष्णं समभ्यर्च्य। तन्मूलपुरुषशशिने अर्घ्यं दद्यादिति शेषेणान्वयः।



**क्षीरोदार्णवसम्भूत अत्रिगोत्रसमुद्भव।**
**गृहाणार्घ्यं मया दत्तं रोहिण्यासहितः शशिन्॥**

**दत्वार्घ्यमनुनानेन उपस्थाय विधुं बुधः।**
**शशिने चन्द्रदेवाय सोमदेवाय चेन्दवे॥**
**मृगिणे शशिबिम्बाय लोकदीपाय दीपिने॥**
**शीतदीधितिबिम्बाय तारकापतये नमः॥**

बुधः ज्ञानी। शशिन् इत्यारभ्य तारकापतय इत्यन्तं मन्त्रेण विधुं उपस्थाय अर्चयित्वेति यावत्। क्षीरदार्णवसम्भूत इति मनुना चन्द्राय अर्घ्यं दत्वा भागवतादिसच्छास्त्राण्यभ्यस्य स्वपेदिति शेषः।

**उपसंहृत्य तत्सर्वं ब्रह्मचारी जितेन्द्रियः।**
**विश्वायेति च मन्त्रेण ततः स्वापं समाचरेत्॥**

जितेन्द्रियः ब्रह्मचारी ब्रह्मज्ञानी पुरुषः तत् सर्वं कृष्णपूजार्घ्यादिकं उपसंहृत्य विश्वायेति मन्त्रेण

**विश्वाय विश्वपतये विश्वानां सम्भवाय च।**
**विश्वेश्वराय गोपाय गोविंदाय नमो नमः॥**

इति मन्त्रेण स्वापं समाचरेत्। विश्वाय सर्वजगत्प्रविष्टाय। विश प्रवेशने[४५] अस्मात् अशुप्रुषिसटिकणिखटिविशंभ्यः क्वन्निति क्वन्प्रत्यये कित्वाद्गुणाभावे विश्व इति रूपम्। तत्सृष्ट्वा तदेवानुप्राविषदिति श्रुतेः[४६]। सर्वत्र प्रविष्टत्वाज्ज्ञानरूपत्वाद्वा विश्वः[४७] । विश प्रवेशने अस्मात्क्विप्।

---

४५ धातुसंख्या १४२४ सिद्धान्त कौमुदी

४६ तैत्तिरीय उपनिषद् टीका श्रीमदाचार्यकृ अ २ मं ११ प्र. अ भा मा म मं बेंगलूर

४७ धातुसंख्या १४२४

वा गतिगन्धनयोरस्माड्ड[४८] । विश् चासौ वश्च विश्वः। विशेषभूतानि चराचराणि ज्ञानमानन्दं ब्रह्मेत्यादिश्रुतेः। विः पक्षिः तेन श्व याति गच्छतीति वा विश्वः। तस्मै विश्वाय। विश्वपतये। विश्वो वायुः समुद्दिष्टः इत्युक्तेः। विश्वस्य पतिः स्वामी तस्मै। विश्वानां सम्भवाय जगज्जनकाय। विश्वेश्वराय समस्तजीवनियामकत्वाद्विश्वः।

**शरीरेषु प्रविष्टत्वाद्विश्वो जीव उदीर्यते।**
**जीवस्य तदधीनत्वाद्विष्णुर्विश्व इति स्मृतः[४९] ॥**

इत्युक्तेः।

प्रत्यहं सुप्तौ मोक्षे प्रलये च भूतान्यत्र प्रविशन्ति वा। यत्प्रयन्त्यभिसंविशन्तीति श्रुतेः[४९*]। विशिष्टसुखरूपत्वाद्वा विश्वः। विश्वं सुबलरूपत्वादित्युक्तेः। अत्र प्रमाणे सुशब्दः सुखवाची। स्वित्यानन्दः समुद्दिष्ट[५०] इत्युक्तेः। सशयोरभेदः। विश्वश्चासावीश्वरश्च विश्वेश्वरः। विश्वस्य जगत ईश्वर इति वा। गोपाय यज्ञरूपेण स्वर्गरक्षकाय गोविंदाय गवि भूम्यां विदः उत्पत्तिः प्रादुर्भावो यस्य तस्मै। गवि विंदः लाभः शय्यालाभ यस्मात्स इति वा गोविंदः। एतादृशाय कृष्णाय नमो नमः। इति मन्त्रेण स्वापं समाचरेदित्यन्वयः॥

**ततो नित्याह्निकं कृत्वा शक्तितो दीयतां धनम्।**
**सर्वायेति च मन्त्रेण ततः पारणमाचरेत्॥**

ततः गुणपूर्णब्रह्मज्ञानी। तनु विस्तारे[५१] अस्माड्डः। गुणानां

४८ धातुसंख्या १०५०
४९. श्रुति....
४९* तैत्तिरीय उपनिषद् अ ३ मं १
५० ....
५१. धातुसंख्या १४६३



योग्यतया लाभः। गत्यर्थक तुधातोर्डः। गत्यर्थस्य ज्ञानार्थत्वादिति। ततः कृष्णप्रादुर्भावदिनात्परदिने नित्याह्निकं कृत्वा ब्राह्मणेभ्यो धनादिकं धनगोभूरत्नादिकं दीयतां दद्यात्। ततः आनन्तर्यार्थकः तिथिनक्षत्रसंयोगे तिथिभोभयगमनानन्तरमित्यर्थः। सर्वायेति मन्त्रेण

**सर्वाय सर्वपतये सर्वेश्वराय सर्वसम्भवाय श्रीबालकृष्णाय नमः॥** इति मन्त्रेणेत्यर्थः। पारणमाचरेत्। अत्र तिथिनक्षत्रसंयोगे उभयान्ते पारणं संयोगाभावे उ तिथ्यन्ते भयान्ते पारणमाचरेदिति व्यवस्थितो विकल्पः। किं च वृध्यर्थकसौत्रतुधातोर्डप्रत्यये त इति रूपम्। अर्श आद्यजन्तः[५२] तं वृद्धमित्यर्थः अधिकमिति यावत्। ततस्तसिल्। पूर्वदिने कृष्णप्रादुर्भावकाले तिथिनक्षत्रसंयोगे परदिने नक्षत्रापेक्षया दिनं अधिकं चेत् तत्परित्यज्येति ल्यब्लोपनिमित्ता पञ्चमी तदन्त इति यावत्। पारणमाचरेदिति व्यवस्थितो विकल्पः।

तदुक्तं पुराणे[५३] ।

तिथिनक्षत्रसंयोगे तिथिभांते च पारणमिति।

पूर्वदिने तिथिनक्षत्रयोः संयोगे तिथिभोभयान्ते पारणं। संयोगभावे तिथ्यन्ते पारणमिति विवेकः। केवलनक्षत्रस्याकिंचित्करत्वादिति। तिथ्यन्ते वा भांते वा पारणमिति प्रमाणतात्पर्यवर्णनं तु कृष्णप्रादुर्भावदिने तिथिनक्षत्रसंयोगे परदिने नक्षत्रापेक्षया दिनमधिकं चेत् तदन्ते पारणम्। तिथ्यपेक्षया नक्षत्रमधिकं चेन्नक्षत्रांते पारणमिति व्यवस्थितो विकल्प इत्यभिप्रायकमिति। अत एवाचार्यैरानन्तर्यार्थकशब्दानन्तरं विहाय यत्त त इत्युक्तं, तेन ज्ञायते प्रमाणस्योक्त एवार्थ इति। सर्वायेति। मन्त्रार्थस्तु। सर्वाय। वाच्यतया वेदाख्यरवसहितत्वात्सर्वः। निर्वचनत्वाद्रेफोत्तरा-

५२. पाणिनीसूत्र अ ५ पाद २ सूत्र १२७ ५३. पुराणे ......

कारलोपः। सर्वव्याप्तत्वाद्वा सर्वः। सर्वं समाप्नोषि ततोऽसि सर्व इति गीतोक्तेः[५४]।

सर्वस्रष्टृत्वाद्वा सर्वः।

**स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता।**
**यतः सर्वस्य तेनाहं सर्वोऽसीत्यृषिभिस्तुत इति**

गीताभाष्योक्तेः[५५]।

तस्मै सर्वायेति कृष्णविशेषणम्। सर्वाय सर्वं सर्वं हिंसायां अस्मादच्। हिंसाऽत्र शरीरशोषकैकादशी जन्माष्टम्याद्युपवासपरः। अत्र आद्यजन्तः। अत्र जन्माष्टम्युपवासविशिष्टाय तत्परायेति यावत्। सर्वायेति तन्त्रं। सर्वाय वेदवेदान्ताख्यरवसहिताय। वेदवेदान्तज्ञायेति यावत्। किं च सशब्दोपपदाद्रमतेः। क्विप् स च डित् टिलोपे सरिति रूपम्। सरः क्रीडादि गुणविशिष्टस्य सुखविशिष्टस्य वा कृष्णस्य वं ज्ञानम् यस्य सः सर्वः तस्मै सर्वाय।

ब्रह्मज्ञानिने विप्राय मह्यं च। सर्वपतये तादर्थे चतुर्थी। तीत्यन्नं समुदाहृतमिति श्रीमदुक्तेः[५६]। सर्वरक्षकान्नार्थं परदिने तिथिनक्षत्रोभयगमनानन्तरं पारणार्थमिति यावत्। सर्वपतये सर्वेषां पतिः जगत्पालकान्नं यस्मात्सः सर्वपतिः। सर्वेषामन्नदातेत्यर्थः तस्मै।

सर्वरक्षकान्नशब्दवाच्यायेति वा। सर्वोपजीव्यत्वादिति। अद्यतेऽत्ति

---

५४. श्रीमद्भगवद्गीता अ ११ श्लोक ४०

५५. गीताभाष्य उदाहृत नारदीयपुराण श्रीमदाचार्यः अ ६ श्लोक ७
प्र. अ भा मा म मं बेंगलूर

५६. .....



च भूतानि तस्मादन्नं तदुच्यते। उपजीव्यत्वमेवाद्यत्वमिति सूत्र-भाष्योक्तेः[५७]।

एतादृशाय सर्वेश्वराय बालकृष्णाय नम इति मन्त्रेण पारणमाचरेदिति।

किं च सर्वसम्भवाय। सकारः सारवाची स्यादित्युक्तेः। सकारः पूर्णवचनः। पूर्वनिरुक्त्या वशब्दः आनन्दवचनः। तथा च सरः पूर्णानन्दस्य कृष्णस्य वं प्रजनं यस्मिन् तत् सर्वं प्रजनार्थक वी[५८] धातो र्डप्रत्यये वमिति रूपम्। जन्माष्टमीदिनमित्यर्थः। संभ अकयप्रवि-सम्भूमसरवहांविष्णुवाचका[५८*] इत्यभिधानात्। समिति मान्तमव्ययं। नक्षत्रमृक्षंभंतारेत्यमरः। संभं। भगवत्सम्बन्धि रोहिणीनक्षत्रमित्यर्थः। सर्वं च संभं च सर्वसंभे। जन्माष्टमीरोहिणीनक्षत्रे तयोः वः असनार्थक वी[५९] धातोर्डः। असनं निरासः। तस्मै तिथिनक्षत्रोभयनिरासार्थं तत्समाप्तिपर्यन्तमिति यावत्। बालकृष्णाय नमः नमू प्रह्वत्वे शब्दे[५९*] च इति धातुव्याख्यानात्। कृष्णमाहात्म्यप्रतिपादकभागवतादिग्रन्थपठनपूर्वकं नमनं कृत्वा तदुभयान्तरे पारणमाचरेदित्यन्वयः।

उक्तं च पञ्चरात्रागमे चतुःषष्टितमाध्याये[६०]।

---

५७. सूत्रभाष्य श्रीमदाचार्यः अ १ पा १ अधि ६ सू १३

५८. धातुसंख्या १०४८

५८* बृहदारण्यकभाष्य श्रीमदाचार्यः अ ५ ब्राह्मण ७ सर्वमूल
प्र. अ भा मा. म मं बेंगलूर

अमरसिंहकोश प्रथमखण्ड दिग्वर्ग श्लोक २२

५९. धातुसंख्या १०४८ ५९* धातुसंख्या ९८१

६०. पञ्चरात्रागम अध्याय ६४

हंस उवाच।

श्रावणे कृष्णपक्षे तु चतुर्थ्यां पूजयेत्सतीम्।
द्रौपदीं भक्तिभावेन पञ्चभर्तृभिरन्विताम्॥

तस्या जन्म तदा प्रोक्ता परविद्धा प्रशस्यते।
अष्टम्यां पूजयेद्देवं कृष्णं च जगदीश्वरम्॥

कृष्णजन्माष्टमी प्रोक्ता सौम्यवारेण संयुता।
रोहिणीसहिता यत्र शतवर्षेण लक्ष्यते॥

परविद्धा न कर्तव्या पूर्वा विद्धा प्रशस्यते।
तथापि वक्ष्यते तत्र निर्णयं च यथार्थतः ॥

या तिथी रोहिणी युक्ता सा तिथिः प्रवरा मता।
तस्यामुपोषणं कार्यं तिथिभांते च कारणम्॥

केचिद्वदन्ति मुनयः तिथ्यन्ते पारणं भवेत्।
तेषामभिमतं वक्ष्ये श्रुणु पुत्र यथार्थतः॥

तिथिनक्षत्रयोर्योगे जन्मकाले रमापतेः।
नक्षत्रमल्पं दिवसात् यद्ययोगे दिनर्क्षयोः॥

तस्मात्तदैव कर्तव्यं तिथ्यन्ते पारणं सुत।
केचिद्वदन्ति मुनयः उत्सवान्ते च पारणम्॥

तेषां चापि प्रवक्ष्यामि अभिप्रायं च हृद्गतम्।
उत्तिथौ प्रोच्यते नाम सर्वनक्षत्रवाचकम्॥



तयोरन्ते प्रकर्तव्यं पारणं तु यथार्थतः।
तेषां हृद्गतमेतद्धि तस्मात्तैश्च महर्षिभिः॥

प्रोच्यते निर्णयं सम्यगुत्सवान्ते च पारणं।
केचिद्वदन्ति मुनयः प्रातरेव हि पारणम्॥

तेषामभिमतं वक्ष्ये श्रुणु पुत्र यथार्थतः।
अष्टमी च यदा न स्यात् संयोगस्था न रोहिणी॥

प्रातःकाले नवम्यां तु पारणं तु यथोचितम्।
तस्मात्तैरुच्यते ह्येतन्निर्णयं शुभमुत्तमम्॥

अभिप्रायं हि तेषां तु नात्र किंचिच्च संशयः।
तस्मात्सर्वप्रयत्नेन तिथिभांते च पारणम्॥

तिथ्यन्ते च तथा भांते संयोगे पारणं चरेत्।
जन्माष्टमी जयन्ती या शिवशक्रादिभिः पुरा॥

ब्रह्मणा सहितैस्तत्र कृतं चोपोषणं शुभम्।
तस्मादुपोष्य भक्त्या तु जयन्ती व्रतमाचरेत्॥

सप्तम्यामर्धरात्रौ तु अष्टमी यत्र दृश्यते।
तस्मिन्दिने व्रतं कार्यं यथा वित्तानुसारतः॥

यदा परदिने चापि घटिका षोडशात्मिका।
रात्रौ यत्र युता तत्र संयोगे रोहिणी भवेत्॥

तस्मिन्दिने तदा कार्यं कृष्णजन्माष्टमीव्रतम्।
सनक्षत्रा तिथिर्यत्र दृश्यते बहुला सुत॥

तस्मिन्दिने कृष्णपूजां कृत्वा चन्द्रोदये द्विजः।
पारणं च प्रकर्तव्यं तिथिभांते यथार्थतः॥

तिथ्यन्ते चैव भांते च पारणं शश्यति द्विजैः।
तिथ्यन्ते चैव भांते च पारणस्यापधिर्नहि॥

उपोषणद्वयं कृत्वा प्रातरेव हि पारणं।
कालान्तरे च संप्राप्तावेतत्कार्यं मनीषिभिः॥

तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम्।
तस्मात्सर्वप्रयत्नेन तिथिभांते च पारणम्॥

अष्टम्यां भक्तिभावेन कृष्णं संपूज्य मानवः।
विधूदये प्रदत्वा तु ह्यर्घ्यं कृष्णाय मन्त्रतः॥

ततश्चन्द्राय अर्घ्यं तु दत्वा देवीं प्रपूजयेत्।
बलभद्रसमायुक्तं गोकुलं पूजयेत्ततः॥

कथां श्रुत्वा तु दानानि दत्वा शक्त्या यथार्थतः।
हरेः पादोदकं पीत्वा कृत्वा जागरणं पुमान्॥

सर्वपापाद्विनिर्मुक्तो मोक्षमार्गं स गच्छति।
यथा प्रोक्तं तीर्थपानमेकादश्यां पुरा मया॥

तद्वत्तीर्थं पिबेद्भक्त्या एकवारं न संशयः।
गन्धैश्च ह्यक्षताभिश्च पुष्पैर्माल्यादिभिश्च तैः॥

कृष्णाय चार्पितं भक्त्या अलं कुर्यात्स्वयं ततः।
निराहारं तत्र कृत्वा तिथिभांते च पारणम्॥



कृत्वा पापाद्विनिर्मुक्तो याति विष्णोः परं पदम्।
इत्येतत्सर्वमाख्यातमष्टमीनिर्णयं सुत॥

इति पञ्चरात्राध्याये[६०*]

नक्षत्रान्तो दिवा चेत्तदन्ते पारणं कर्तव्यम् । तिथ्यन्तो रात्रौ चेदपि तदन्ते पारणं कर्तव्यमिति न नियमः। नक्षत्रस्यामुख्यत्वादिति तिथिनक्षत्रसंयोगे तिथिभांते च पारणमिति प्रमाणतात्पर्यं यान्ति। तन्निर्मूलम्। सर्वज्ञाभिप्रायविरुद्धं च। अत उभयान्ते पारणं कर्तव्यमिति भावः। अत एवोक्तं प्रमाणे।

तिथिनक्षत्रसंयोगे यदा ह्येकस्य संक्षये।
पारणं तु प्रकुर्वीत समं गोमांसभक्षणम्॥

तिथिनक्षत्रसंयोगे तिथिभांते च पारणम्।
अन्यथा व्रतहानिः स्यादिति शातातपो ब्रवीदिति
धर्मायेति ततःस्वस्थो मुच्यते सर्वकिल्बिषैः॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः जयन्तीकल्पः समाप्तः॥

ततः पारणानन्तरं। धर्मायेति मन्त्रेण स्वस्थः सन् स्वशब्दवाच्य-भगवद्ध्यानपरः सर्वकिल्बिषैः मुच्यते। तदुक्तं दशमस्कन्ध भागवते[६१]।

अथ सर्वगुणोपेतः कालः परमशोभनः।

यर्ह्येवाजनजन्मर्क्षः शांतर्क्षग्रहतारकम् इति।

यर्हि यस्मिन् षष्टिघटिकात्मकाष्टमीदिने। आजनजन्मर्क्षः अजनः

६०* पञ्चरात्रागम अध्याय ६४

६१. छांदोग्यभाष्य अ ६ खण्ड ३ पुट ८३० पंक्ति १८

उत्पत्तिशून्यो भगवान् आज्जातः अजनः चतुर्मुख इति वा। तस्येदं आजनं आजनं जन्मर्क्षं रोहिणीनक्षत्रं यस्मिन्सः। स्थितः स कालः परमशोभनः तत्र हेतुः अथ सर्वगुणोपेतः त विद्यते थं अन्नं यस्मिन्सः अथः अन्नं थमिति श्रुतेः। अथश्चासौ सर्वगुणोपेतश्च। अथसर्वगुणोपेत इति। कीदृशः शांतर्क्षग्रहतारकः। शांतानि पृक्षाणि अस्थूलनक्षत्राणि ग्रहाः राहादयः तारकाः स्थूलनक्षत्राणि यस्मिन्सः। शांतर्क्षग्रहतारक इति योजना।

धर्माय धर्मपतये धर्माणां सम्भवाय च।
धर्मेश्वराय देवाय गोविंदाय नमो नमः॥

धर्मायेति। धर्माय सर्वजगद्धारकाय। धारकत्वाद्धर्मो भगवानित्युक्तेः। धर्माणांसंभवाय। एकं पदं। षष्ट्याः अलुक्। बहुवचनमाद्यर्थे। धर्माणां धर्मभीमार्जुनादीनां संभवः भावप्रधानः। भू बहौ बहुः पूर्णतायामिति धातुव्याख्यानात्। योग्यतानुसारेण सम्यक् पूर्णत्वं यस्मात्सः धर्माणां संभवः तस्मै। धर्मेश्वराय जगद्धारकधर्मादीशेभ्यो वराय देवाय क्रीडादिगुणविशिष्टाय धर्मपतये धर्मान् एकादशी-कृष्णाष्टम्युपवासतिथिभोभयांते पारणादिधर्मान् पांतीति धर्मपाः। धर्मरता इति यावत्। तेषां तिः आनन्दो यस्मात्सः धर्मपतिः। तस्मै। गोविंदाय वेदप्रतिपाद्याय। कृष्णाय नम इति मन्त्रेण स्वस्थः स्वातन्त्र्यात्स्व इति प्रोक्त इत्युक्तेः स्वशब्दवाच्यविष्णवैकनिष्ठ इत्यर्थः भवति।

ततः सर्वकिल्बिषैः मुच्यते। संसारान्मुक्तो भवतीति। अत उक्तरीत्या धर्मानुष्ठानमवश्यं कर्तव्यमेवेति भावः। अथवा धर्मायेतितत इत्येकं पदम्। धर्मेषु एकादशीकृष्णाष्टम्युपवासतिथिभोभयांत पारणादिधर्मेषु। अयः गतिः बुद्धिरिति यावत्। तस्याः। इति समाप्तिः।

अभावः यस्य सः धर्मायेतिः धर्मायेतिश्चासौ स च धर्मायेतिततः। धर्मविषयकबुद्ध्यभावविशिष्टः पुरुष इत्यर्थः सार्वविभक्तिकस्तसिः। सः पुरुषः। अत एव स्वस्थः। स्वित्यानन्दः समुद्दिष्ट इत्युक्तेः। आनन्दरूपब्रह्मणि न तिष्ठतीति स्वस्थः। तद्भक्त्यादिरहित इत्यर्थः। पुरुषः। सर्वकिल्बिषैः। अमुच्यते। न मुच्यत इत्यर्थः। संसारान्मुक्तो न भवति। सर्वदा संसारबद्धो भवतीति भावः।

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यनेकगुणगणालङ्कृत
रामचन्द्रदिव्यश्रीपादपद्माराधक श्रीसत्यसन्तुष्टतीर्थ करकमलसञ्जात
श्रीमत्सत्यपरायणतीर्थश्रीपादविरचिता
॥ जयन्तीकल्पव्याख्या समाप्ता॥

॥ श्रीहनुमभीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकः
श्री सीतापतिःश्रीरामचन्द्रःप्रीयताम्॥

**सत्यसन्तुष्टवाराशेः जातस्सत्यपरायणः।**
**चिन्तामणिस्सदा भूयात्सतां चिन्तितसिद्धये ॥**